# सिद्धान्तलेशसंग्रह

[ भाषानुवादसहित ]



प्रकाशनस्थान—

अच्युतग्रन्थमाला-कार्यालय,

काशी ।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



अच्युतग्रन्थमालायाः ( ख ) विभागे षष्ठं प्रसूनम्

श्रीमदप्पय्यदीक्षितविरचितः

# सिद्धान्तलेशसंग्रहः

वेदान्ताचार्य पं० श्रीमूलशङ्करव्यासविरचितेन सटिप्पणभाषानुवादेन
समलङ्कृतः

श्रीअच्युतग्रन्थमालाध्यक्षेण पं० श्रीश्रीकृष्णपन्तशास्त्रिसाहित्याचार्येण
पं० श्रीगोविन्द-नरहरि-वैजापुरकरन्यायाचार्यवेदान्तशास्त्रिणा च
सम्पादितः

प्रकाशनस्थानम्—

अच्युतग्रन्थमाला-कार्यालयः, काशी ।

संवत्

द्वितीयावृत्तिः ] २०११ [ मूल्यम् ६)

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri



॥ श्रीः ॥

# सिद्धान्तलेश-सङ्ग्रहकी विषय-सूची

## प्रथम परिच्छेद [ पृ० १-२६२ ]



## द्वितीय परिच्छेद [ पृ० २६३–४१४ ]



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## तृतीय परिच्छेद [ पृ० ४१५–५१० ]



## चतुर्थ परिच्छेद [ पृ० ५११–५५६ ]



इति ।



CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

॥ श्रीगणेशाय नमः ॥

# वेदान्त-सिद्धान्त-सूक्ति-मञ्जरी

## प्रथमः परिच्छेदः

तरणिशतसवर्णं कर्णघूर्णद्विरेफा-
वलिविलितकपोलोद्दामदानाभिरामम् ।
गिरिशगिरिसुताभ्यां लालितं नित्यमङ्के
स्वजनभरणशीलं शीलये विघ्नराजम् ॥ १ ॥

श्रीमद्गुरुपदाम्भोजद्वन्द्वमानम्य भक्तितः ।
सिद्धान्तलेशसिद्धान्तान् कारिकाभिर्निदर्शये ॥ २ ॥

अपूर्वो नियमोऽन्यस्य परिसङ्ख्येति च क्रमात् ।
त्रयो हि विधयस्तेषु श्रोतव्य इति को विधिः ॥ ३ ॥

तत्रोपायापरिज्ञानादलौकिकसमीक्षणे ।
प्रकटार्थकृतः प्राहुरपूर्वं श्रवणे विधिम् ॥ ४ ॥

विचारस्य विचार्यार्थनिर्णयं प्रति हेतुता ।
अपरोक्षप्रमाणस्य तत्साक्षात्कारहेतुता ॥ ५ ॥

प्राप्तैव किन्त्वनियता भ्रान्तिः प्राप्ताऽन्यसाधनैः ।
ततो नियम इत्याहुः सर्वे विवरणानुगाः ॥ ६ ॥

तथा तदीयाः शब्दस्तु परोक्षज्ञानकृत्पुरा ।
मननादियुतोऽध्यक्षं कुर्याद्विधुरचित्तवत् ॥ ७ ॥

अन्ये परोक्ष एवाऽऽत्मज्ञाने नियममास्थिताः ।
मनसैवेदमाप्तव्यमित्यादिश्रुतिदर्शनात् ॥ ८ ॥

गान्धर्वशास्त्रवत् चित्तसहकारितयेष्यते ।
आत्मापरोक्षे श्रवणं तत्रैव नियमं परे ॥ ९ ॥

ऊहापोहात्मिका चित्तक्रियैव श्रवणं विधेः ।
अपरोक्षं परोक्षं वा नाऽमानस्यास्य तत्फलम् ॥ १० ॥

तस्मात् पुन्दोपतात्पर्यभ्रान्तिसंस्कारशान्तये ।
नियमोऽस्येति सङ्क्षेपशारीरककृतो विदुः ॥ ११ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चिकित्साशास्त्रवत् प्राप्तव्यापारान्तरवारिणी ।
श्रवणे परिसङ्ख्येयमिति वार्तिकवेदिनः ॥ १२ ॥

श्रवणं ह्यागमाचार्यवाक्यजं ज्ञानमिष्यते ।
अयोग्येऽत्र विधिर्नेति वाचस्पतिमतानुगाः ॥ १३ ॥

जगज्जन्मस्थितिलयेष्वेकैकं ब्रह्मलक्षणम् ।
प्रत्येकं ब्रह्मलिङ्गत्वादित्याहुः कौमुदीकृतः ॥ १४ ॥

उपादानत्वविज्ञत्ववस्त्वन्तरनिराक्रियाः ।
व्युत्क्रमाल्लब्धुमाचख्युरन्ये संवलितं त्रयम् ॥ १५ ॥

तत्रोपादानता विश्वविवर्तास्पदता चितः ।
स्वाभिन्नन्यूनसत्तार्थो विवर्त इति कथ्यते ॥ १६ ॥

अथ शुद्धमुपादानमीश्वरो जीव एव वा ।
शुद्धं संक्षेपकमते ज्ञेयलक्षणवर्णनात् ॥ १७ ॥

सार्वात्म्यस्येशलिङ्गत्वात् यः सर्वज्ञ इति श्रुतेः ।
मायोपहितमीशं तदाहुर्विवरणानुगाः ॥ १८ ॥

ईश्वरो वियदादौ स्याज्जीवेशौ लिङ्गतद्गते ।
मायाऽविद्याभिदावादाः केचिदेवं प्रचक्षते ॥ १९ ॥

लिङ्गादौ जीव एवेति केचित्तत्रैकदेशिनः ।
महाभूतसृष्ट्युक्तिस्तु कलानामन्यदृष्टितः ॥ २० ॥

मायाऽविद्यैक्यवादेऽपि जीवतादात्म्यदर्शनात् ।
जीव एव हि लिङ्गादेरुपादानमितीतरे ॥ २१ ॥

इष्ट ईश उपादानं सर्वस्मिन् व्यावहारिके ।
प्रातिभासिककार्ये तु जीव इत्यपरे जगुः ॥ २२ ॥

स्वात्ममोहात् समस्तस्य सेश्वरस्य प्रकल्पकः ।
स्वप्नवत् जीव एवैको नापरोऽस्तीति केचन ॥ २३ ॥

अहेतुत्वादमायस्य मायाशबलतेष्यते ।
साऽप्युपादानमेवेति तत्त्वनिर्णयकृन्मतम् ॥ २४ ॥

ब्रह्ममात्रमुपादानं माया तु द्वारकारणम् ।
मृत्स्नलक्षणतावत् संक्षेपशारीरककृतां नये ॥ २५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ब्रह्मैव जीवाश्रितयाऽविद्यया विषयीकृतम् ।
वाचस्पतिमते हेतुर्माया तु सहकारिणी ॥ २६ ॥
अपूर्वानपरं ब्रह्म नोपादानं जगत्स्थितेः ।
माया तु मुख्योपादानमिति मुक्तावलीकृतः ॥ २७ ॥
क ईश्वरोऽथ को जीवः प्रकटार्थकृतो विदुः ।
ईशं मायाचिदाभासं जीवमाविद्यकं च तम् ॥ २८ ॥
अनादिविश्वप्रकृतिर्माया चिन्मात्रसंश्रया ।
तदेकदेशो विद्या तु विक्षेपावरणान्विता ॥ २९ ॥
उक्ता, तत्त्वविवेके तु शुद्धसत्त्वमयी स्फुटा ।
माया रजस्तमोध्वस्ताऽविद्या शेषं तु पूर्ववत् ॥ ३० ॥
विक्षेपशक्तिप्राधान्यात् मायेशोपाधिरुच्यते ।
अविद्यावरणोत्कर्षात् जीवस्येत्यपि कश्चन ॥ ३१ ॥
कार्योपाधिर्भवेत् जीवः कारणोपाधिरीश्वरः ।
प्रतिबिम्बोऽत्र संक्षेपशारीरककृतां नये ॥ ३२ ॥
घटाभ्रवारिणोर्व्योम्नः प्रतिबिम्बाविवाऽऽत्मनः ।
बुद्धितद्वासनाभासौ जीवेशौ, बुद्ध्युपाधिकः ॥ ३३ ॥
कूटस्थः शुद्धचिद्ब्रह्म चित्रदीपे चतुर्विधम् ।
कूटस्थे कल्पितो जीवः शुद्धे ब्रह्मणि चेश्वरः ।
अहं ब्रह्मेति बाधायामैक्यमित्यपि तन्मतम् ॥ ३४ ॥
ब्रह्मानन्दे विराडादि समष्टिव्यष्ट्युपाधितः ।
षोढा चिदानन्दमयव्यष्टिर्जीव इतीरितम् ॥ ३५ ॥
शुद्धलिप्ताङ्किता-पूर्णवर्णचित्र-पटोपमाः ।
ब्रह्मेशसूत्रवैराजाः पटाभाससमोऽसुभृत् ।
चित्रदीपे चित्रपटन्यायेनेत्थं निरूपिताः ॥ ३६ ॥
विराट्सूत्राक्षराण्यादौ विभज्य प्रणवाक्षरैः ।
विलाप्य गौडपादीये तुरीयात्माऽवशेषितः ॥ ३७ ॥
मायाच्छन्ने चिदाभासः कूटस्थे व्यावहारिकः ।
तस्मिन्निद्रावृते तादृग्जीवोऽन्य प्रातिभासिकः ॥ ३८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जीवस्त्वित्थं दृग्दृश्यविवेके प्रतिपादितः ।
इत्येते दर्शिताः पक्षा प्रतिबिम्बेशवादिनाम् ॥ ३९ ॥

अविद्यायां चिदाभासो जीवो बिम्बचिदीश्वरः ।
स्वातन्त्र्याद्युपपत्तेरित्याहुर्विवरणानुगाः ॥ ४० ॥

घटसंवृत्तमित्यादि श्रुतियुक्तिसमाश्रयात् ।
अन्येऽन्तःकरणेनावच्छिन्नं जीवं बभाषिरे ॥ ४१ ॥

कौन्तेय इव राधेयो जीवः स्वाविद्यया परः ।
नाऽऽभासो नाऽप्यवच्छिन्न इत्याहुरपरे बुधाः ॥ ४२ ॥

एको जीव उताऽनेकस्तत्रानुपद्वादिनः ।
एकं देहं च तस्यैकमन्यत् स्वप्नसमं विदुः ॥ ४३ ॥

सूत्रमेकं परं जीवं तदाभासान् परान् परे ।
योगीव कायव्यूहेषु जीवोऽन्य इति चाऽपरे ॥ ४४ ॥

बद्धमुक्तव्यवस्थार्थमन्तःकरणभेदतः ।
जीवभेदं परे प्राहुर्व्यवस्था चाऽत्र कीदृशी ॥ ४५ ॥

प्रतिजीवमविद्यांशा भिन्ना ब्रह्मावृतिक्षमाः ।
तन्नाशक्रमतो मुक्तिव्यवस्था कैश्चिदीर्यते ॥ ४६ ॥

आत्मन्यविद्यासंसर्गो हृदयग्रन्थिसंश्रयः ।
तद्भेदात्तदसंसर्गः क्रमान्मुक्तिक्रमः परैः ॥ ४७ ॥

जातिर्व्यक्तिमिव ध्वस्तां स्वात्मज्ञं यज्जहाति सा ।
जीवं जीवाश्रिताऽविद्या मुक्तिः सेत्यपि चापरैः ॥ ४८ ॥

प्रतिजीवमविद्याया भेदमाश्रित्य चेतरे ।
तद्विनाशक्रमात् मुक्तिव्यवस्थां सम्प्रचक्षते ॥ ४९ ॥

प्रातिभासिकरूप्यादेः प्रकृतिर्जीवसंश्रया ।
अविशेषेण सर्वेषामविद्यातः प्रवर्तते ।
प्रपञ्चोऽस्मिन्नेकतन्त्वारब्धः पक्षे पटो यथा ॥ ५० ॥

प्रत्यविद्यं प्रपञ्चस्य भेदं न्यायनये यथा ।
अपेक्षाबुद्धिजद्वित्वं शुक्तिरूप्यं च भिद्यते ॥ ५१ ॥
अविद्येशाश्रया माया विश्वस्येत्यपरे जगुः ॥ ५२ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईशस्य कर्तृता कीदृक् तत्र केचित्प्रचक्षते ।
कार्यानुकूलविज्ञानचिकीर्षाकृतितेति ताम् ॥ ५३ ॥
कार्यानुकूलविज्ञानमात्रं सा नेतरे तयोः ।
कार्यत्वेनानवस्थानादिति चान्ये प्रचक्षते ॥ ५४ ॥



एवं जीवोऽपि कर्ता स्याज्जगतः स्वप्नजस्य च ।
ततः सृष्टयनुकूलार्था लोचनैवेति चापरे ॥ ५५ ॥
जगत्कर्तृत्वसंसिद्धं सर्वज्ञत्वं समाथतम् ।
ईशस्य शास्त्रयोनित्वात्तच्च कीदृग्विधं भवेत् ॥ ५६ ॥
तत्र सर्वार्थविषयसर्वधीवासनोपधः
साक्षित्वाद्भारतीतीर्थमते सार्वज्ञ्यमीरितम् ॥ ५७ ॥
चिच्छायाग्राहिभिर्मायावृत्तिभेदैस्तदीशितुः ।
त्रैकालिकेष्वापरोक्ष्यं प्रकटार्थकृतो विदुः ॥ ५८ ॥
तत्त्वशुद्धिकृतो भूते स्मृतिं भाविनि तूहनम् ।
सदा सर्वस्य सत्त्वात्तु साक्षिणा कौमुदीकृतः ॥ ५९ ॥
सार्वज्ञ्ये ज्ञानरूपत्वमिष्टं न ज्ञानकर्तृता ।
भाष्येऽस्य जीवलिङ्गत्वकीर्तनादिति ते विदुः ॥ ६० ॥
दृश्यावच्छिन्नरूपेण चितः कार्यत्वसम्भवात् ।
सार्वज्ञ्यं ज्ञानकर्तृत्वं वाचस्पतिमते स्थितम् ॥ ६१ ॥
बुद्धौ संसृज्यते जीवः सर्वगो व्यक्तिजातिवत् ।
अन्यैस्तद्वृत्त्युपारूढो ज्ञाता विवरणे स्थितः ॥ ६२ ॥
यद्वाऽन्तः करणोपाधिर्जीवो वृत्त्या बहिर्गजः ।
विषयब्रह्मचैतन्याभेदव्यक्त्याऽर्थभासकः ॥ ६३ ॥
अथवा सर्वगोऽविद्यावृतोऽसौ न प्रकाशते ।
बुद्धावनावृतो वृत्तिभग्नवारणभासकः ॥ ६४ ॥
वृत्तेश्चिदुपरागो वा अभेदव्यक्तिरेव वा ।
फलमावृतिभङ्गो वा तत्राद्यं कीदृशं भवेत् ॥ ६५ ॥
नयायिकादिवत् केचिद्विषयत्वं स्वभावतः ।
वृत्तिनिर्गमवैयर्थ्यादन्ये तद्द्वारसङ्गमम् ॥ ६६ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तरङ्गतरुसंस्पर्शान्नदीस्पर्शे तराविव ।
विषये वृत्तिसंसर्गाज्जीवसङ्गं परे विदुः ॥ ६७ ॥
द्वितीयपक्षे जीवस्यासर्वगत्वादसङ्करात् ।
विषयब्रह्मचैतन्याभेदव्यक्त्यैव तं परे ॥ ६८ ॥
अथ द्वितीये काऽभेदव्यक्तिस्तत्रापि केचन ।
कुल्याद्वारेव सा वृत्त्या क्षेत्रकासारवारिणोः ॥ ६९ ॥
सत्युपाधौ दृढं बिम्बप्रतिबिम्बभिदास्थितेः ।
वृत्त्यग्रे विषयस्फूर्त्त्या भासार्पणमितीतरे ॥ ७० ॥
बिम्बत्वयुक्तं ब्राह्मं स्याज्जैवं तदुपलक्षितम् ।
वृत्तौ विषयचैतन्यं तदभेदे च तां परे ॥ ७१ ॥
अथाऽऽवरणभङ्गोऽपि तृतीये कीदृशो मतः ।
मोहनाशः स चेदिष्टो मोक्षः स्याद् घटवेदनात् ॥ ७२ ॥
खद्योतेनेव तमसश्छिद्रं केचित्प्रचक्षते ।
कटवद्वेष्टनं भीतभटवद्वा पलायनम् ॥ ७३ ॥
पुनः कन्दलनादन्येऽनावृत्तिं वृत्त्यनेहसम् ।
अज्ञोऽहमिति विज्ञानात्स्वाश्रितेनाप्यनावृतिम् ॥ ७४ ॥
वृत्तिनाश्यं परे वृत्तिसमसंख्यं प्रचक्षते ।
अवस्थाज्ञानमज्ञानं नष्टमित्यनुभूतितः ॥ ७५ ॥
केचिदूचुरनादीदं मूलाज्ञानमिवेतरे ।
सादिनिद्रादिवत् तत्रानादित्वे कस्य नाश्यता ॥ ७६ ॥
अत्र केचित् स्वभावेन व्यवस्था प्रागभाववत् ।
सत्स्वप्यावरकेष्वर्थप्रकाशं च प्रचक्षते ॥ ७७ ॥
विशेषदर्शनाभावकूटात् संशयसम्भवात् ।
आवृतस्याप्रकाशाच्च पर्यायेणावृतिं परे ॥ ७८ ॥
न चानावरकाज्ञानशेषो मुक्तौ प्रसज्यते ।
मूलाज्ञानच्छिदा छेद्यास्तदवस्था इमा यतः ॥ ७९ ॥
अन्ये त्वेकस्य विच्छेदमितरेषां पराभवम् ।
तं चावरणशक्तीनां प्रतिबन्धं प्रचक्षते ॥ ८० ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

तत्र धारावहज्ञानेष्वाद्येनैव पराभवात् ।
अज्ञानानां द्वितीयादेः साफल्यं कथमुच्यते ॥ ८१ ॥
अत्राहुर्दीपधारेव तिरस्कृत्य तमः स्थिता ।
वृत्तिधारेत्यनावारो वृत्तीनां क्षेमतः फलम् ॥ ८२ ॥
पर्यायेणावृतिर्न्यायचन्द्रिकाकृद्भिरीरिता ।
अर्थस्य मोहैर्बोधेन स्वकालावरणक्षतिः ॥ ८३ ॥
केचिदाहुर्घटाज्ञानमाद्यज्ञानेन हन्यते ।
द्वितीयाद्यैस्तु कालादिविशिष्टाज्ञानबाधनम् ॥ ८४ ॥
वृत्तिश्चिरस्थितैकैव स्याद्धारावाहिकस्थले ।
भिन्ना वा वृत्तयः सन्तु स्थूलकालार्थगोचराः ॥ ८५ ॥
उपास्तिवदमानानि सन्तु वाऽनाद्यवृत्तयः ।
गृहीतग्रहणात् सूक्ष्मकालस्यातीन्द्रियत्वतः ॥ ८६ ॥
ननु नाज्ञानविच्छित्तिः परोक्षज्ञानतस्ततः ।
भ्रान्तिजिज्ञासयोर्दृष्टेरत्र केचित् समादधुः ॥ ८७ ॥
द्विविधं विषयाज्ञानं साक्षिविक्षेपसङ्गतेः ।
अर्थगं पौरुषं चेति परोक्षात् पौरुषक्षयः ॥ ८८ ॥
अन्ये पौरुषमज्ञानमाहुः शक्तिद्वयाश्रयम् ।
परोक्षज्ञानतस्तत्राऽऽवरणांशपरिक्षयम् ॥ ८९ ॥
विषयस्थं परे मोहं मूलाज्ञानांशरूपकम् ।
अंशांशिनोरभेदाच्च साक्षिणा तस्य सङ्गतिम् ॥ ९० ॥
सुखादिगोचरा वृत्तिर्ननु नाज्ञानघातिनी ।
नैवं मोहसुखादीनां साक्षिवेद्यत्वनिर्णयात् ॥ ९१ ॥
कः साक्षी तत्र कूटस्थदीपे कूटस्थचित्स्वयम् ।
स्वाध्यस्तदेहयुग्मादेः साक्षीति प्रतिपादितः ॥ ९२ ॥
उक्तो नाटकदीपेऽसौ नृत्यशालास्थदीपवत् ।
नेशो जीवोऽप्यसौ तत्त्वदीपे ब्रह्मेति वर्णनात् ॥ ९३ ॥
ईशस्य रूपभेदोऽसौ कारणत्वादिवर्जितः ।
जीवान्तरङ्गः कौमुद्यां प्राज्ञाख्यः परिकीर्तितः ॥ ९४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

शुक्तीदमंशवदसौ तत्त्वशुद्धौ च वर्णितः ।
अज्ञानोपहितः कैश्चिल्लिङ्गैरुपहितः परैः ॥ ९५ ॥
अविद्ययाऽऽवृतः साक्षी तेनान्यस्य प्रथा कथम् ।
अत्राहू राहुवत् केचित्तस्य स्वावृतभास्यताम् ॥ ९६ ॥
अविद्यावुद्धितद्धर्मभासकांशेतरावृतिः ।
कल्प्यते वस्तुतस्तेषु संशयादेरदर्शनात् ॥ ९७ ॥
स्याच्चेदनावृतः साक्षी भासेतास्य सुखात्मता ।
प्रेमास्पदत्वाद् भात्येव परिच्छेदादतृप्तता ॥ ९८ ॥
साक्षिण्युपाधिमालिन्यादध्यस्तादपकर्षतः ।
सुखापकर्षमद्वैतविद्याचार्याः प्रचक्षते ॥ ९९ ॥
सुखांशोऽस्याऽऽवृतो नास्ति न भातीत्यनुभूतितः ।
चिदंशोऽनावृतो वृत्त्या सौख्यव्यक्तिरितीतरे ॥१००॥
अहंकारादिनः साक्षिभास्यस्य स्मरणं कथम् ।
सूक्ष्मावस्था हि संस्कारो वृत्तीनां स्यान्न साक्षिणः ॥१०१॥
शृणु यद्वृत्त्यवच्छिन्नसाक्षिणा यत्प्रकाश्यते ।
तत्संस्कारं हि सा धत्ते न त्वाकारव्यवस्थया ॥१०२॥
अन्ये तु विषयाकारवृत्तिस्थानित्यसाक्षिणा ।
त्रिपुटीभासिन ऽऽधानात् संस्कारस्य स्मृतिं जगुः ॥१०३॥
अन्ये त्वविद्यावृत्त्यैव सौषुप्तस्मृतिक्लृप्तया ।
अहङ्कारादिभानेन संस्कारं सम्प्रचक्षते ॥१०४॥
उपास्तिवन्मनोवृत्तिरियं न ज्ञानमिष्यते ।
प्रत्यभिज्ञास्मृतिज्ञानं तदांश इति चापरे ॥१०५॥
इतरे ज्ञानमेवेदं मनसोऽपीन्द्रियत्वतः ।
बाह्यार्थेष्वेव वृत्तीनामावृत्त्यभिभवः फलम् ॥१०६॥
शुक्त्यादौ नन्विदंवृत्त्याऽऽवरणाभिभवो न हि ।
रूप्याध्यासाद्यसंसिद्धेरत्र केचित् प्रचक्षते ॥१०७॥
इदमाकारवृत्त्येदमंशे मोहाक्षितावपि ।
शुक्त्याद्यंशेऽसितत्वेन रजताद्यनुभवस्ततः ॥१०८॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत एव स्फुरन् भ्रान्तावाधार इदमंशकः ।
शुक्त्याद्यंशस्त्वधिष्ठानं सकार्याज्ञानगोचरः ॥१०९॥
अन्ये वृत्त्येदमज्ञानावरणांशपरिक्षयात् ।
विक्षेपांशेन रजतं जीवन्मुक्तौ जगद्यथा ॥११०॥
नृसिंहभट्टोपाध्यायः पूर्वं रजतविभ्रमात् ।
न मानमिदमाकारवृत्ताविति समभ्यधात् ॥१११॥
अन्ये त्वेकैव सामान्यवृत्तिर्वा भ्रान्तिकारणम् ।
तत्साक्षिभास्यमध्यस्तमलं वृत्त्येति मेनिरे ॥११२॥
वृत्तिरेकेदमाकारा सामान्यज्ञानरूपिणी ।
इदं रजततादात्म्यगोचराऽन्येति केचन ॥११३॥
इदं तद्वृत्त्यवच्छिन्नचिन्मोहौ तत्तदन्विते ।
युगपद्रूप्यतद्वृत्ती कुर्वाते इति चापरे ॥११४॥
ननु हेतुनियम्यत्वात् परोक्षत्वापरोक्षयोः ।
वृत्तेर्निर्गमनं व्यर्थमत्र केचित् समादधुः ॥११५॥
अर्थेप्याश्रयवृत्तिस्थचिद्भास्येप्वापरोक्ष्यतः ।
कल्प्यते निर्गमो वृत्तेः परोक्षेऽगतिकल्पना ॥११६॥
साक्षात्प्रमातृसम्पर्के सुखादेरापरोक्ष्यतः ।
अन्यत्रापि तथेत्याहुर्वृत्तेर्निर्गमनात् परे ॥११७॥
इतरे स्पष्टताहेतुमाचख्युर्वृत्तिनिर्गमम् ।
न चानुमितमाधुर्यं स्पष्टमास्वादितं यथा ॥११८॥
नन्वावरणविच्छेदः स्पष्टता तामनिर्गता ।
करोतु तुल्यविषयतत्तद्ज्ञानभेदिनी ॥११९॥
मैवं परोक्षवृत्त्याऽपि मोहोच्छेदप्रसङ्गतः ।
आपरोक्ष्यं तु नो जातिरांशिकत्वाच्च सङ्करात् ॥१२०॥
अन्ये विषयसम्मोहभेदनाय तमास्थिताः ।
परे चिदुपरागार्थमभेदव्यक्तये परे ॥१२१॥
अभेदो जीवपरयोः सिद्धो वेदान्तमानकः ।
यतोऽत्र सर्ववेदान्तास्तात्पर्येण समन्वियुः ॥१२२॥

*इति श्रीमद्गङ्गाधरसरस्वतीविरचितायां वेदान्तसिद्धान्तसूक्तिमञ्जर्यां*
*प्रथमः परिच्छेदः समाप्तः ॥*

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ द्वितीयः परिच्छेदः

ननूपजीव्यप्रत्यक्षविरुद्धश्रुतियुक्तिभिः ।
बोद्ध्यते कथमद्वैतं तत्त्वशुद्धिकृतो विदुः ॥ १ ॥
शुक्तीदन्तेव सन्मात्रं सर्वाध्यक्षेषु गोचरः ।
रूप्यवद् घटभेदादिर्भ्रान्तेरित्यविरुद्धता ॥ २ ॥
ब्रह्मसत्तानुविद्धं हि विश्वमिन्द्रियगोचरः ।
स्वतो नेत्यविरुद्धत्वमाहुर्न्यायसुधाकृतः ॥ ३ ॥
जडेष्वावरणायोगात् चक्षुरादेर्न तात्त्विकी ।
मानतेत्यविरुद्धत्वं संक्षेपाचार्यदर्शने ॥ ४ ॥
जातिकालदिकं सत्त्वमिष्टमध्यक्षगोचरः ।
नहि तच्छ्रौतमिथ्यात्वविरुद्धमिति केचन ॥ ५ ॥
अथावज्ज्ञानबाध्यत्वमबाध्यत्वमिति द्विधा ।
सत्त्वयोर्भेदमाश्रित्याविरोधमितरे जगुः ॥ ६ ॥
प्रत्यक्षं बाध्यमाचख्युरपच्छेदनयात् परे ।
यतः शङ्कितदोषं तन्निर्दोषा बाधते श्रुतिः ॥ ७ ॥
ननु सोमपदेनैव भवेन्मत्वर्थलक्षणा ।
प्रस्तरो यजमानः स्यादत्राहुर्भामतीकृतः ॥ ८ ॥
मानान्तराद् बलवती श्रुतिस्तात्पर्य गोचरे ।
अन्यत्र त्वविरुद्धार्थे देवताविग्रहादिके ॥ ९ ॥
कथञ्चित् विषयप्राप्त्या मानान्तरसमर्थने ।
श्रुतिर्बलीयसी नो चेद्विपरीतं बलाबलम् ॥ १० ॥
अथवा कृष्णलेऽशक्तेर्लक्षणा श्रपयेदिति ।
व्यवस्थेत्थं विवरणवार्तिके समुदीरिता ॥ ११ ॥
ननूपक्रमवत्पूर्वं प्रत्यक्षं बलवच्छ्रुतेः ।
नैक्यवाक्येष्विदं बाधस्त्वपच्छेदनयादिह ॥ १२ ॥
ननूपजीव्यप्रत्यक्षविरुद्धेऽर्थे श्रुतेः कथम् ।
मानत्वं युक्तमिति चेदत्र केचित्प्रचक्षते ॥ १३ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

न पदज्ञानमानत्वनियता शाब्दमानता ।
वृषभादिपदे भ्रान्त्या न्यूनाधिक्येऽपि दर्शनात् ॥ १४ ॥
असद्विलक्षणं रूपमुपजीव्यं न तात्त्विकम् ।
तच्चानिर्वचनीयार्थेष्वविरुद्धमितीतरे ॥ १५ ॥
पारमार्थिकसत्यत्वं नेह नानेति नुद्यते ।
व्यावहारिकसत्यत्वं न निषिद्धमितीतरे ॥ १६ ॥
अन्येऽविवेकादेकैव ब्रह्मसत्ता घटादिषु ।
असन्निकृष्टे ह्यध्यासोऽन्यत्र संसर्गकल्पनम् ॥ १७ ॥
नन्वेवं स्वमुखं स्वस्यासन्निकृष्टमितीतरत् ।
दर्पणेऽध्यस्ततताऽऽपन्नं प्रतिबिम्बं मृषेति चेत ॥ १८ ॥
दर्पणादिपरावृत्तैर्निजैर्नयररश्मिभिः ।
सन्निकृष्टं मुखं तत्रोपाध्यन्तःस्थितिविभ्रमः ॥ १९ ॥
न दर्पणे मुखाध्यासः संस्कारादेरसम्भवात् ।
ममेदमितिभानाच्चेत्याहुर्विवरणानुगाः ॥ २० ॥
अद्वैतविद्याचार्यास्तु पार्श्वस्थैर्भेददर्शनात् ।
ग्रीवास्थादन्यदध्यस्तं प्रतिबिम्बमुखं विदुः ॥ २१ ॥
सामान्यतोऽपि संस्कारो विशेषारोपकारणम् ।
स्वप्ने तथैव वाच्यत्वादिह बिम्बानुसारिता ॥ २२ ॥
न छाया नापि वस्त्वन्यत्प्रतिबिम्बमसम्भवात् ।
नन्वध्यासोऽप्ययुक्तोऽस्योपादानाज्ञानसंक्षयात ॥ २३ ॥
अत्र केचिदविद्याऽत्राऽऽवरणांशे विनश्यति ।
विक्षेपांशे तु बिम्बादि प्रतिबद्धाऽस्य कारणम् ॥ २४ ॥
मूलविद्याऽथवा हेतुर्विक्षेपांशेन संस्थिता ।
बिम्बादिदोषजन्यत्वात् मिथ्येत्यन्ये प्रचक्षते ॥ २५ ॥
बिम्बापसरणाध्यक्षाद्विक्षेपांशस्य बाधनम् ।
विरोधादथवा ब्रह्मज्ञानेनैवास्य बाधनम् ॥ २६ ॥
सुषुप्त्याख्यं तमोऽज्ञानं तद्बीजं स्वप्नबोधयोः ।
इत्याचार्योक्तितः स्वाप्नाध्यासोऽप्येवं प्रतीयताम् ॥ २७ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

जाग्रत्प्रबोधबाध्यत्वमन्ये स्वप्नस्य मन्वते ।
दण्डभ्रान्तेरहिभ्रान्त्या दृढयेयात्र बाधनम् ॥ २८ ॥
व्यावहारिकमावृत्त्य जीवं निद्रा तमोमयी ।
स्वाप्नमाविष्करोत्यर्थं बाध्यं प्राग्जीवबोधतः ॥ २९ ॥
नन्वहङ्कृत्यवच्छिन्नेऽनवच्छिन्ने च नोचितः ।
स्वाप्नाध्यासोऽनहम्भावात् चक्षुराद्यनपेक्षणात् ॥ ३० ॥
अत्र द्वितीय आचख्युः केचिद्देहान्तरेव तम् ।
स्वप्नधीवृत्त्यभिव्यक्तशुद्धचैतन्यसंश्रयम् ॥ ३१ ॥
अन्येऽनहमवच्छिन्ना विद्याविम्बितचिद्गतम् ।
तद्भास्यं तदधिष्ठानवृत्त्या मातरि तत्प्रथाम् ॥ ३२ ॥
आद्येऽहङ्कृत्युपहितचिदाभासास्पदं परे ।
अहन्ताधीप्रसक्तिस्तु नाहङ्कारविशेषणात् ॥ ३३ ॥
इदंवृत्तिचिदाभासे इत्थं रजतकल्पनात् ।
नाहं रजतधीस्तद्वदनन्यनरवेद्यता ॥ ३४ ॥
अन्ये तु बिम्बचैतन्ये रजताध्यासवादिनः ।
प्राहुस्तत्त्वदविद्योत्थं तत्तत्पुरुषगोचरम् ॥ ३५ ॥
नन्वस्तु रजताध्यासे कथञ्चिच्चाक्षुषत्वधीः ।
कथं स्वाप्नगजज्ञाने तस्याः स घु समर्थनम् ॥ ३६ ॥
खानां विरामादग्राह्यप्रातिभासिकनिह्नवात् ।
स्वयंज्योतिष्ट्वादाच्च न स्वाप्नेन्द्रियकल्पना ॥ ३७ ॥
अत्राहुरत एवात्र चाक्षुषत्वादिधीर्भ्रमः ।
अन्वयव्यतिरेकादिकल्पनाऽप्यक्षिकल्पना ॥ ३८ ॥
असम्भावितसादृश्यदर्शनात् स्वप्नदर्शने ।
इत्थमेव हि शुक्त्यादौ रूप्याद्यध्यक्षधीगतिः ॥ ३९ ॥
दृष्टिसृष्टिविदस्त्वाहुर्गतिं जाग्रद्धियोऽप्यमुम् ।
अर्थसृष्टेः पुराऽर्थेषु सन्निकर्षाद्यसम्भवात् ॥ ४० ॥
निरुपाधिरथाऽन्यो वा कल्पकः प्रथमे भवेत् ।
मुक्तस्य संसृतिः को वा द्वितीये मोहकल्पकः ॥ ४१ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अत्राहुः पूर्वसंक्लृप्तमोहयुक्तोऽन्यकल्पकः ।
अविद्याव्यतिरिक्ते वा दृष्टिसृष्टिरितीतरे ॥ ४२ ॥
नन्वेवं श्रौतसर्गस्य कल्पकः को न कश्चन ।
अध्यारोप्यापवादो हि निष्प्रपञ्चप्रसिद्धये ॥ ४३ ॥
सूत्रेषु सृष्टिचिन्ता तु कृत्वा चिन्ताप्रदर्शनम् ।
स्वाप्नवत् फलसंवादः शुद्धिर्वा कर्मणां फलम् ॥ ४४ ॥
दृष्टिरेव हि विश्वस्य सृष्टिरित्यपरा विधा ।
ज्ञानस्वरूपमेवाहुरित्येतत् स्मृतियानिकाः ॥ ४५ ॥
सृष्टिदृष्टिं परे प्राहुः संस्काराद्यनपेक्षणात् ।
तथापि विश्वं मिथ्यैव बाध्यत्वाच्छ्रुतिमानतः ॥ ४६ ॥
अहङ्कारादिमिथ्यात्वं नन्वेवं सम्प्रसिद्ध्यति ।
तदध्यासाय टीकादौ व्यर्था कारणकल्पना ॥ ४७ ॥
अत्राहुः साक्षिवेद्यत्वादहङ्कारस्पृहादिकम् ।
प्रातिभासिकमेवेति चित्सुखाचार्ययोगिनः ॥ ४८ ॥
चैतन्यस्याप्रमाणस्य प्रमाणत्वेन कीर्तनात् ।
ते तु रामाद्वयाचार्याः प्रौढिवादं प्रचक्षते ॥ ४९ ॥
ननु प्रपञ्चो मिथ्या चेत्कथमर्थक्रियाक्षमः ।
केचित्स्वप्नवदत्राहुः समसत्ताकृतक्रियाम् ॥ ५० ॥
स्वप्नोत्थभयकम्पादेर्जागरेऽप्यनुवर्तनात् ।
अद्वैतविद्याचार्याणां समसत्ता न सम्मता ॥ ५१ ॥
अन्तर्बाह्यपुमध्यस्ततमसोऽर्थक्रियेक्षणात् ।
दीपादिनाश्यता दृष्टेर्युक्तमेतदितीतरे ॥ ५२ ॥
अन्ये तु हेतुसत्यत्वापेक्षा नार्थक्रियां प्रति ।
मरीचितोये तोयत्वजात्यभावान्न तत्क्रिया ॥ ५३ ॥
अन्ये तु जातिरस्त्येव काचिदर्थक्रियाऽपि च ।
हेतूच्छेदेन बाधेनानध्यासेन च नाखिला ॥ ५४ ॥
ननु मिथ्यात्वसत्यत्वे ब्रह्मैक्यश्रुतिपीडनम् ।
तन्मिथ्यात्वे तु विश्वस्य सत्यत्वं केन वार्यते ॥ ५५ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

सत्यमत्रोक्तमद्वैतदीपिकायां विरोधिनीम् ।
स्वधर्म्यन्यूनसत्ताकं मिथ्यात्वं सत्यतां हरेत् ॥ ५६ ॥
स्वधर्मीक्षाऽक्षतो धर्मः स्वविरुद्धहरोऽथवा ।
शाब्दप्रामाण्ययोग्यत्वसत्त्वं लौकिकमप्यलम् ॥ ५७ ॥
न जीवैः सद्वितीयत्वं ब्रह्मणस्तदभेदतः ।
तेषां च भोगसाङ्कर्यं वारणीयमुपाधिभिः ॥ ५८ ॥
नन्वन्यभेदादन्यस्य कथं साङ्कर्यवारणम् ।
अत्राहुर्नान्यताऽसङ्गे भोक्तृतादात्म्यकल्पनात् ॥ ५९ ॥
अन्ये भोक्ता चिदाभासः कूटस्थैक्येन कल्पितः ।
अतो न भिन्नगामित्वमित्याहुर्बन्धमोक्षयोः ॥ ६० ॥
अन्ये विशिष्टो भोक्ताऽत्र संशुद्धो मुक्तिसङ्गतः ।
आत्मेन्द्रियमनोयुक्तमित्यादिश्रुतिदर्शनात् ॥ ६१ ॥
परे कर्तृमनःसङ्गाद्भोक्तृताऽन्या प्रकल्प्यते ।
स्फटिकेष्विव लौहित्यं श्रोत्रवत्तद्व्यवस्थितिः ॥ ६२ ॥
एके त्वनाश्रयोपाधिभेदभेदप्रकल्पनम् ।
प्रतिबिम्बेष्विवोपाधिधर्माध्यासव्यवस्थितिः ॥ ६३ ॥
क उपाधिरिह प्राहुर्भोगायतनभिन्नताम् ।
अन्ये विशिष्टतद्भेदं भोगसाङ्कर्यकारणम् ॥ ६४ ॥
देहभेदं परे प्राहुर्बाल्यादिषु च तद्भिदा ।
माययाऽपचयी देहो दीपवन्नैव चाणुभिः ॥ ६५ ॥
लिङ्गभेदं परेऽविद्याभेदमन्ये प्रचक्षते ।
अदृष्टनियमादिभ्यः कारणादेर्व्यवस्थितिः ॥ ६६ ॥
एवमण्वात्मवादेऽपि भोगश्चेशो प्रसज्यते ।
तथाऽन्ये बहवो दोषा विद्वद्भिः संप्रदर्शिताः ॥ ६७ ॥
तस्मात् प्रपञ्चमिथ्यात्वात् पराभेदाच्च देहिनः ।
मानान्तराविरोधेन सिद्धोऽद्वैते समन्वयः ॥ ६८ ॥

*इति श्रीमद्गङ्गाधरसरस्वतीविरचितायां वेदान्तसिद्धान्तसूक्तिमञ्जर्यां*
*द्वितीयः परिच्छेदः समाप्तः*

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## अथ तृतीयः परिच्छेदः

ज्ञानेनैव कथं मुक्तिः कर्मभिश्चापि तत्स्मृतेः ।
नाविद्यकत्वात् बन्धस्य नान्यः पन्था इति श्रुतेः ॥ १ ॥
कर्मणामुपयोगस्तु भामतीकृन्मते स्थितः ।
तमेतमिति वाक्येन मुख्ये विविदिषोद्भवे ॥ २ ॥
स्वर्गवत्काम्यमाने तं ज्ञाने विवरणानुगाः ।
जिज्ञासितव्यं श्रुतिभिर्ब्रह्मेत्यत्र श्रुतेरिव ॥ ३ ॥
तत्रोपयोगः कथितः कैश्चिदाश्रमकर्मणाम् ।
परैस्तु वैधुरादीनामपि कल्पतरूक्तितः ॥ ४ ॥
तत्र क्लृप्तफलत्वेन नित्यानामेव कैश्चन ।
काम्यानामपि संक्षेपशारीरककृतां नये ॥ ५ ॥
न चोपकारसंक्लृप्तिकालं वाक्यं प्रतीक्षते ।
प्राप्तेर्वचनवैयर्थ्यं द्वारभेदेऽविशिष्टता ॥ ६ ॥
ब्राह्मणग्रहणं चात्र त्रैवर्णिकनिदर्शनम् ।
वार्तिकोक्तेस्तथोद्देश्यगतत्वेनाविवक्षणात् ॥ ७ ॥
वैदिकत्वात्तु विद्यायाः शूद्रस्यानधिकारिता ।
केचित् पौराणिके ज्ञाने तस्याप्याहुरधिक्रियाम् ॥ ८ ॥
संन्यासस्यात्र किं द्वारेणोपयोगोऽत्र केचन ।
कर्माविनाश्यदुरितनाशद्वारेति चक्षते ॥ ९ ॥
अन्ये त्वदृष्टद्वारेण श्रवणेऽस्याङ्गतां जगुः ।
दृष्टेन निर्विक्षेपेण नियमं त्वितरे बुधाः ॥ १० ॥
क्षत्रियादेरसंन्यासाच्छ्रवणादि कथं भवेत् ।
तत्र केचन संन्यासमाहुः क्षत्रियवैश्ययोः ॥ ११ ॥
अन्ये तु ब्राह्मणस्यैव संन्यासो बहुधा श्रुतेः ।
देवादिवदसंन्यासश्रवणं क्षत्रवैश्ययोः ॥ १२ ॥
ब्रह्मसंस्थश्रुतेर्न्यासी मुख्यः श्रवणविद्ययोः ।
क्षत्रियादेरनुमतिं जन्मान्तरफलां परे ॥ १३ ॥
श्रवणं नन्वसंन्यासं जन्मान्तरफलं कथम् ।
दृष्टार्थत्वाददृष्टस्यासाङ्गत्वेनाप्यसम्भवात् ॥ १४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

उच्यते यज्ञाजादृष्टजातमेतत् फलावधि ।
उत्पाद्य तेन निर्वाह्यमिति न द्वारकल्पना ॥ १५ ॥

आचार्याश्चैवमेवाऽऽहुरादोषपरिसंक्षयात् ।
आवृत्तं नियमादृष्टं निष्पाद्य फलदं यतः ॥ १६ ॥

कृच्छ्राशीति फलस्मृत्याऽऽधानवत्कर्तृसंस्कृतेः ।
तद्‌द्वारा श्रवणं केचिज्जन्मान्तरफलं जगुः ॥ १७ ॥

श्रवणादेरिव ज्ञानसाधनत्वं समर्थितम् ।
प्रमाणैर्भारतीतीर्थैर्निर्गुणोपास्तिकर्मणः ॥ १८ ॥

ननु किं करणं ब्रह्मसाक्षात्कारेऽत्र केचन ।
प्रत्ययावृत्तिमाचख्युः सांख्ये योगे च संभवात् ॥ १९ ॥

अन्ये तु मन एवाऽऽहुरेनां तत्सहकारिणीम् ।
महावाक्यं परे प्राहुर्मनसः प्रतिषेधतः ॥ २० ॥

मानान्तरस्याप्रसरात् परोक्षेण भ्रमक्षयात् ।
सहकारिविधानाच्च शब्दादप्यपरोक्षधीः ॥ २१ ॥

भावनावृत्तिसचिवाद् विधुरस्येव मानसात् ।
कामिन्या इव शब्दात्तामितरे संप्रचक्षते ॥ २२ ॥

विज्ञातृचिदभिन्नस्य विषयस्यापरोक्षतः ।
परोक्ष्यासम्भवादन्ये प्राहुः शब्दापरोक्षताम् ॥ २३ ॥

अद्वैतविद्याचार्यास्तु स्वसुखज्ञानसंग्रहात् ।
आपरोक्ष्यं स्फुरच्चित्त्वं तदभेदात्तु तद्युजि ॥ २४ ॥

नन्वध्ययनकालेऽपि शब्दात् स्यादपरोक्षधीः ।
सत्ताधृतिर्विचाराच्चेत्, मननादिश्रमो वृथा ॥ २५ ॥

मैवं पुंदोषशान्त्यर्थं मननादेर्विधानतः ।
तत्तत्संसृष्टवृत्त्यैत्थं तदज्ञाननिबर्हणम् ॥ २६ ॥

नन्वेवं वृत्त्यभिव्यक्तचिदंशे विषयैक्यतः ।
श्रवणादिमतो नश्येन्मूलाज्ञानं घटेक्षणात् ॥ २७ ॥

मैवमत्राहुराचार्या न संदृश इति श्रुतेः ।
चिच्चक्षुराद्ययोर्नैव चिद्‌द्वाराऽस्त्यावृतिर्जडे ॥ २८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

मूलाज्ञानस्य विषयो जड एवाथवाऽन्यथा ।
चक्षुषा सौरभं भायाद्वृत्तिव्यक्तचिदन्वयात् ॥ २९ ॥
साक्षिणः स्वप्रकाशत्वान्नाहं वृत्त्याऽपि तत्क्षयः ।
तथा कालादिवैशिष्ट्यगोचरप्रत्यभिज्ञया ॥ ३० ॥
केचिच्छ्रोतव्यनियमाद्दृष्टदोपक्षयान्वितम् ।
वाक्यजं ज्ञानमेवाहुर्मूलाज्ञाननिबर्हणम् ॥ ३१ ॥
अन्ये स्वरूपसम्बन्धाद्वैजात्याद्वोऽपि वाक्यजात् ।
अखण्डाकारकं ज्ञानमाचख्युस्तन्निवर्तकम् ॥ ३२ ॥
ननु स्वहेतुमज्ञानं विरोधात् सा कथं हरेत् ।
वृत्तिर्मैवं विरुद्धत्वाद्वह्निसंयोगवत् घटे ॥ ३३ ॥
हृत्वा मोहं विनश्येत्सा कतकाम्बिन्दुवह्नयः ।
पङ्कभस्मतृणानीव वास्तप्तायसभूमिषु ॥ ३४ ॥
आहुरन्ये तु वृत्तीद्ध आत्मैवाज्ञानतत्कृतम् ।
प्रदहेत् सूर्यकान्तेद्धा सूर्यकान्तिस्तृणं यथा ॥ ३५ ॥
उपादानक्षयादन्ये विश्वोच्छेदं प्रचक्षते ।
जीवन्मुक्तस्य भोगोऽत्राविद्यालेशेन युज्यते ॥ ३६ ॥

*इति श्रीमद्गङ्गाधरसरस्वतीविरचितायां वेदान्तसिद्धान्तसूक्तिमञ्जर्यां*
*तृतीयः परिच्छेदः समाप्तः*

## अथ चतुर्थः परिच्छेदः

अथ कोऽयमविद्याया लेशो यदनुवर्तनात् ।
देहादेः प्रतिभासेन जीवन्मुक्तिरिहोच्यते ॥ १ ॥
ज्ञानेनावरणे नष्टे विक्षेपांशोऽनुवर्तते ।
प्रारब्धप्रतिबन्धेन स लेशस्तेन जीवनम् ॥ २ ॥
क्षालितेष्विह हिङ्ग्वादिपात्रेष्वन्ये तु वासनाम् ।
नष्टानुवृत्तिमाचख्युरन्ये दग्धपटे यथा ॥ ३ ॥
विरोधिन्युदिते शेषासम्भवादर्थवादताम् ।
सर्वज्ञात्मगुरुः प्राह जीवन्मुक्तिश्रुतेः स्फुटम् ॥ ४ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

का निवृत्तिरविद्यायाः ब्रह्मसिद्धिकृतां नये ।
आत्मैव तदभावो हि मोहतत्संक्षयश्च सः ॥ ५ ॥
आनन्दबोधाचार्यास्तु युक्तिभिः पञ्चमीं विधाम् ।
सदसत्सदसन्मिथ्याभिन्नामात्मनि तां विदुः ॥ ६ ॥
उत्पत्तिरिव नाशोऽपि क्षणिकाभावविक्रिया ।
अद्वैतविद्याचार्यास्तद् वृत्तिकालेति तां विदुः ॥ ७ ॥
नन्वेवं क्षणिकत्वं स्यान्मुक्तेर्भ्रान्तोऽसि न ह्यसौ ।
दुःखाभावः सुखं वेति पुरुषार्थत्ववर्जनात् ॥ ८ ॥
दुःखं सुखविरोधीति तन्नाशोऽपि हि न स्वतः ।
पुमर्थः सुखमात्रं तु तथा चित्सुखदर्शने ॥ ९ ॥
प्रत्यगेव परानन्दस्तिरोभूतः स्वमोहतः ।
स्वकण्ठचामीकरवत् प्राप्तः प्राप्यः स्वविद्यया ॥ १० ॥
अप्राप्तिरपि तस्याभूत् संसृतौ व्यावहारिकी ।
स्वविद्यया निवृत्तेति मुख्यां प्राप्तिं परे जगुः ॥ ११ ॥
परे प्रागावृतत्वेन पारोक्षादनुमर्थताम् ।
मुक्तौ तु तदभिन्नत्वादात्मप्राप्त्या पुमर्थताम् ॥ १२ ॥
अन्ये भूमसुखाद्भेदो जीवेऽध्यस्तोऽभवत्पुरा ।
मुक्तौ तन्नाशतः प्राहुः प्राप्तिं स्फुटसुखात्मिकाम् ॥ १३ ॥
अथ मुक्तो भवेच्छुद्ध उतेशोऽत्र निगद्यते ।
व्यक्ता जीवैक्यवादे हि शुद्धब्रह्मैकशेषता ॥ १४ ॥
अनेकजीववादेऽपि प्रतिबिम्बेशवादिनाम् ।
मुक्तस्य बिम्बसद्भावाच्छुद्धता पर्यवस्यति ॥ १५ ॥
अनेकजीववादेऽतो नावच्छेदनयः शुभः ।
बद्धमुक्ताव्यवस्थानात् तद्दशोपाधिबन्धनात् ॥ १६ ॥
बिम्बेशवादे मुक्तः प्राक्सर्वजीवविमोचनात् ।
ईशो भूत्वा ततः शुद्धे स्वभावे व्यवतिष्ठते ॥ १७ ॥
न च विद्यान्तरफलैः साम्यं मोहपरिक्षयात् ।
तेषु भोगस्य साम्येऽपि जगद्व्यापारवर्जनात् ॥ १८ ॥

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

पक्षोऽयं चरमः साधुः सूत्रभाष्यादिषु स्फुटः ।
आविर्भावस्वरूपेऽपि गुणाष्टकनिरूपणात् ॥ १९ ॥
ईशांशस्येशभावाप्तौ सर्वदुःखप्रसञ्जनम् ।
निवारयद्भिरग्रेऽपि बिम्बभावप्रदर्शनात् ॥ २० ॥
पराभिध्यानतः सत्यकामत्वादितिरोहितेः ।
नाशे मुक्तौ पुनस्तेषामाविर्भावस्य चेरणात् ॥ २१ ॥
ब्राह्मचैतन्यमात्रत्वाविरोधस्य च कीर्तनात् ।
प्रतिबिम्बांशजीवैक्यवादयोर्नैतदञ्जसा ॥ २२ ॥
जीवेशभेदसत्यत्वेऽप्येतत्सर्वमसङ्गतम् ।
न च शक्त्यन्तरं जीवे प्रमाणफलवर्जनात् ॥ २३ ॥

आसर्वमुक्ति परिकल्पितसत्यकाम-
सङ्कल्पकल्पितजगत्स्थितिभङ्गसर्गे ।
सत्यं स्वतस्तु सुखचिद्घनमद्वितीयं
मुक्तोपसृप्यमहमस्मि विशुद्धतत्त्वम् ॥ २४ ॥

श्रुति-कल्पलता-कुञ्जसञ्जाता सूक्तिमञ्जरी ।
रम्या राद्धान्तगन्धाढ्या रञ्जयत्वखिलान् बुधान् ॥ २५ ॥

*इति श्रीमत्परमहंस-परिव्राजकाचार्य-गङ्गाधरेन्द्र-सरस्वतिविरचितायां वेदान्तसिद्धान्तसूक्तिमञ्जर्यां चतुर्थः परिच्छेदः समाप्तः*

**॥ समाप्ता चेयं वेदान्तसिद्धान्तसूक्तिमञ्जरी ॥**





CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

# भूमिका



कुछ लिखनेसे पहले उन श्रद्धेय महानुभावोंको मैं कदापि नहीं भूल सकता हूँ, जिन्होंने इस ग्रन्थके अनुवादकी आशातीत सफलताके लिए अनेक कष्टोंको सहकर परिश्रम किया है और उपयोगी सलाह देते रहे हैं। यदि उनकी सलाह न होती तो ऐसे क्लिष्ट ग्रन्थका अनुवाद होना प्रायः असम्भव ही था; वे महानुभाव हैं—श्रद्धेय वयोवृद्ध पूज्य पं० चण्डीप्रसाद शुक्लजी और मान्यवर श्रद्धेय पं० श्रीकृष्ण पन्तजी।

सिद्धान्तलेशसंग्रहके प्रणेता पण्डित अप्पय्य दीक्षित उन महान् पण्डितोंमें थे, जिनका नाम आजतक विद्वत्समुदायमें बड़े गौरव और श्रद्धासे लिया जाता है। इन्होंने अपनी लेखनीसे ऐसे-ऐसे अनेक ग्रन्थ लिखे हैं, जिन्हें देखकर सरस विद्वानोंका मस्तक अपने-आप उनके चरणोंमें झुक जाता है।

इतिहासज्ञोंने ई० १५२० से १५९३ तक इनका जीवनकाल निश्चित * किया है। पं० अप्पय्य दीक्षितका जन्म काञ्चीके आस-पास 'अडपप्पल' गाँवमें हुआ था, अभीतक उनके कुछ वंशज उस प्रान्तमें विद्यमान हैं। अप्पय्य दीक्षितके पितामहका नाम आचार्य दीक्षित था, क्योंकि उन्होंने न्यायरक्षामणि ग्रन्थमें † पितामहका नामग्रहणका करके नमस्कार किया है। इनका

---

* यद्यपि इस विषयमें कुछ मतभेद है अर्थात् कुछ लोग १५५०—१६२२ तक इनका स्थितिकाल मानते हैं, तथापि तत्सम्बन्धी विचार पुरुषार्थचतुष्टयान्यतमोत्पादक न होनेके कारण प्रकृतमें अनावश्यक-सा है। और इतिहासजिज्ञासु लोग अन्य ग्रन्थोंसे भी इसका अवधारण कर सकते हैं। इसलिए मैं इसपर अधिक लिखना पसन्द नहीं करता।

† 'आसेतुबन्धतटमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानम्।
अद्वैतचित्सुखमहाम्बुधिमग्नभावमस्मत्पितामहमशेषगुरुं प्रपद्ये॥
इस प्रकारका श्लोक न्यायरक्षामणिमें उपलब्ध होता है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

वक्षःस्थलाचार्य भी दूसरा * नाम था। ये अपने समयके प्रौढ विद्वान् और दानी थे। इन्होंने बड़े-बड़े अनेक यज्ञ किये थे।

अप्पय्य दीक्षितके पिताका नाम 'रङ्गराजाध्वरी' था। ये भी अनेक शास्त्रोंमें अप्रतिम पण्डित थे। अप्पय्य दीक्षितने इन्हींसे सब शास्त्र पढ़े थे, इस विषयका स्वयं दीक्षितजीने ही अनेक स्थानोंमें स्पष्टीकरण किया है †।

अनेक प्रमाणोंसे दीक्षितजीका नाम 'अप्प' दीक्षित ही मालूम होता है, परन्तु आन्ध्र, कर्णाटक आदि देशोंकी भाषासरणिसे इनके 'अप्पय या अप्पय्य' ऐसे भिन्न नाम भी व्यवहारमें प्रचलित हैं। ये विजयनगरके अधीश्वर चिन्न बोम्म, नरसिंहदेव और वेङ्कटपतिरायके समकालिक थे, इसमें ‡ अनेक प्रमाण मिलते हैं। सिद्धान्तकौमुदीके विख्यात रचयिता भट्टोजी दीक्षितने भी सिद्धान्तकौमुदीकी रचनाके बाद दक्षिणमें जाकर अप्पय दीक्षितजीसे पढ़ा था, उसके बाद उन्होंने तत्त्वकौस्तुभ नामका ग्रन्थ लिखा था, जिसमें अपने गुरु अप्पय दीक्षितको ही प्रणाम किया है।

अप्पय दीक्षितने अपने जीवनकालमें सौसे अधिक ग्रन्थ लिखे थे, ऐसा प्रमाण मिलता है, × क्योंकि नामके आगे 'चतुरधिकशतप्रबन्धनिर्वाहका-

---

* यहाँपर चित्रमीमांसाका कुछ अंश प्रमाणरूपसे उद्धृत करते हैं—'यथास्मत्कुलकूटस्थवक्षःस्थलाचार्यविरचितवरदराजवसन्तोत्सवे—

'काञ्चित् काञ्चनगौराङ्गीं वीक्ष्य साक्षादिव श्रियम्।
वरदः संशयापन्नो वक्षःस्थलमवेक्षते ॥'

† इसी ग्रन्थके 'तातचरणव्याख्यावचःख्यापितान्', 'विद्वद्गुरोर्विहितविश्वजिदध्वरस्य' इत्यादि पद्य इसमें प्रमाण हैं।

‡ इस विषयमें ये प्रमाण मिलते हैं—

'हेमाभिषेकसमये परितो निषण्णसौवर्णसंहतिमिषाच्चिनबोम्मभूपः।
अप्पय्यदीक्षितमखेरनवद्यविद्याकल्पद्रुमस्य कुरुते कनकालवालम् ॥१॥
द्विर्भावः पुष्पकेतोर्विबुधविटपिनां पौनरुक्त्यं विकल्प-
श्चिन्तारत्नस्य वीप्सा तपनतनुभवो वासवस्य द्विरुक्तिः।
द्वैतं देवस्य दैत्याधिपमथनकलाकेलिकारस्य कुर्व-
न्नानन्दं कोविदानां जगति विजयते श्रीनृसिंहः क्षितीन्द्रः ॥२॥
अमुं कुवलयानन्दमकरोदप्पदीक्षितः।
नियोगाद् व्यङ्कटपतेर्निरुपाधिकृपानिधेः ॥३॥'

ये तीनों पद्य क्रमशः समरपुङ्गव दीक्षितके यात्राप्रबन्धमें, अप्पय्य दीक्षितविरचित चित्रमीमांसा और कुवलयानन्दमें मिलते हैं।

× यद्यपि अप्पय्य दीक्षितके सभी ग्रन्थोंके नाम ज्ञात नहीं हो सके हैं, गुरुपरम्परा एवं अन्यान्य ग्रन्थोंसे जितने नाम हमें उपलब्ध हो सके हैं, उनका निम्न लिखित प्रकारसे उल्लेख किया है—

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

चार्य' अर्थात् एक सौ चार ग्रन्थोंके निर्माण करनेवाले आचार्य, यह उपाधि लगी हुई कहीं-कहींपर मिलती है।

अस्तु। जो कुछ हो, परन्तु इतना तो निर्विवाद सिद्ध होता है कि दीक्षित-जीका सब शास्त्रोंमें अप्रतिहत पाण्डित्य था और उनकी प्रतिपादनशैली विलक्षण ही थी। ये परम आस्तिक थे। इनका गोत्र भारद्वाज था। ये * ७२ वर्षकी दीर्घ आयुतक जीवित रहे। शायद इतनी बड़ी आयुवाले पण्डित संसारमें अल्प ही हुए हैं। इतिहासप्रेमियोंके लिए इतनी ही सामग्री छोड़कर अब अन्य प्रकृतोपयोगी विचार करते हैं।

सिद्धान्तलेशसङ्ग्रह वेदान्तदर्शनका एक बड़ा उपयोगी ग्रन्थ है, क्योंकि इसके यथावत् अध्ययन करनेपर अद्वैतवेदान्तशास्त्रका ऐसा कोई भी मत अज्ञात नहीं रह जाता जो इसमें न आया हो। इस ग्रन्थमें ग्रन्थकारने जिन-जिन मतोंका सङ्ग्रह किया है, उनका आगे जाकर दिग्दर्शन करायेंगे। इससे पहले यह बतलानेकी चेष्टा करते हैं कि 'दर्शन' शब्दका क्या अर्थ है, वे कितने हैं और उनकी क्या आवश्यकता है?

यद्यपि दर्शनशब्दके प्रकरणानुसार अनेक अर्थ होते हैं, और उनका कोषोंमें निरूपण भी मिलता है †, तथापि जहां शास्त्रशब्दके ‡ साथ दर्शनशब्द आता

---

कुवलयानन्द, चित्रमीमांसा, वृत्तिवार्तिक, नामसंग्रहमाला और इसकी व्याख्या, नक्षत्रवादावली, प्राकृतचन्द्रिका, चित्रपुट, विधिरसायन, सुखोपयोजनी, उपक्रमपराक्रम, परिमल, न्यायरक्षामणि, सिद्धान्तलेशसंग्रह, मतसारार्थसंग्रह, नयमञ्जरी, न्यायमुक्तावली, नयमयूखमालिका, शिवार्क-मणिदीपिका, मणिमालिका, रत्नत्रयपरीक्षा, शिखरिणीमाला, शिवतत्त्वविवेक, ब्रह्मतर्कस्तव, शिवकर्णामृत, रामायणतात्पर्यसंग्रह, भारततात्पर्यसंग्रह, शिवाद्वैतनिर्णय, शिवार्चनचन्द्रिका, यादवचन्द्रिका, शिवध्यानपद्धति, आदित्यस्तवरत्न, मध्वतन्त्रमुखमर्दन और मध्वमतविध्वंसन आदि।

* इस विषयमें दीक्षितजीके भ्राताके पुत्र नीलकण्ठ द्वारा विरचित शिवलीलार्णवके प्रथम सर्गमें एक श्लोक प्रमाणरूपसे मिलता है—

'कालेन शम्भुः किल तावताऽपि कलाश्चतुष्षष्टिमिताः प्रणिन्ये।
द्वासप्ततिं प्राप्य समाः प्रबन्धाञ्छतं व्यधादप्पयदीक्षितेन्द्रः॥'

और इसी प्रमाणसे दीक्षितजीने सौ ग्रन्थ बनाये हैं, यह भी सिद्ध होता है।

† जैसे नेत्र, स्वप्न, बुद्धि, धर्म, दर्पण आदि।

‡ शास्त्रशब्दका लक्षण यों मिलता है—

'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत शास्त्रं शास्त्रविदो विदुः॥'

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

है, वहाँपर उसका अर्थ होता है—'दृश्यते यथार्थरूपतया ज्ञायते अलौकि-कार्थो येन' इस व्युत्पत्तिसे ठीक-ठीक रूपसे अलौकिक अर्थका ( लौकिकचक्षु आदि प्रमाणोंसे ज्ञात नहीं होनेवाले अर्थका ) परिज्ञान जिससे होता हो, ऐसा शास्त्र ।

दर्शनशास्त्रके सामान्यरूपसे पहले दो विभाग किये जा सकते हैं – आस्तिकदर्शन और नास्तिकदर्शन । आस्तिकदर्शन उन्हें कहते हैं, जिनमें वेदोंके प्रामाण्यका अङ्गीकार करके पारलौकिक अर्थका निरूपण किया गया हो । और नास्तिकदर्शन उन्हें कहते हैं जिनमें वेदोंके प्रामाण्यका अङ्गीकार न करके केवल युक्तिसे अर्थका प्रतिपादन किया गया हो । इस प्रकार सामान्यतः द्विधा विभक्त दर्शनशास्त्रोंका पुनः इस प्रकार अवान्तर विभाग किया गया है—आस्तिक दर्शन-शास्त्रोंके फिर तीन विभाग हैं—न्याय, सांख्य और मीमांसा । न्यायशब्दसे गौतम और कणाद महर्षि द्वारा प्रणीत न्याय और वैशेषिक, ये दो शास्त्र विवक्षित हैं। साङ्ख्यशब्दसे कपिल और पतञ्जलि द्वारा लोकमें आविर्भूत सांख्य और योग शास्त्र विवक्षित हैं । मीमांसाशब्दसे जैमिनि और भगवान् वेदव्यास द्वारा प्रणीत पूर्वमीमांसा और उत्तरमीमांसा विवक्षित हैं। इसीलिए व्यवहार होता है कि आस्तिकदर्शन छः प्रकारके हैं ।

इसी रीतिसे नास्तिकदर्शनके भी पहले-पहल चार्वाक, बौद्ध और जैन इस प्रकार तीन विभाग करनेके बाद विनेयोंकी ( शिष्योंकी ) बुद्धिके अनुसार विभक्त माध्यमिक, योगाचार, सौत्रान्तिक और वैभाषिकके भेदसे बौद्धदर्शनके चतुर्विध होनेसे वे भी छः प्रकारके हैं । यद्यपि दर्शनशास्त्रके अन्य भी अवान्तर भेद हैं, तथापि मुख्यरूपसे उनकी गणना न होनेके कारण व्यावहारिक प्रसिद्धि नहीं है ।

वेदप्रामाण्यवादी समुदायकी दृष्टिसे नास्तिकदर्शनोंमें परमपुरुषार्थ-प्रयोजकता विवादास्पद है, क्योंकि किसी प्रमुख * प्रमाणविशेषका अनङ्गीकार

---

अर्थात् हितसाधनोंमें प्रवृत्ति और अहितसाधनोंसे निवृत्ति जिससे बोधित होती हो, शास्त्र कहा जाता है ।

* अर्थात् सर्वप्रमाणाधिराज अपौरुषेय वेदवाक्योंके आधारके बिना ही केवल कौशलके आधारपर नास्तिकमतावलम्बियोंका विचार प्रस्तुत हुआ है, अतः युक्ति अप्रति

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

करके केवल यौक्तिकवादका ही उनमें अङ्गीकार किया गया है। वेदविरुद्ध युक्तिके अप्रतिष्ठित होनेके कारण यथार्थरूपसे तत्त्वविनिश्चय उनसे नहीं हो सकता। यद्यपि इस विषयमें सत्प्रतिपक्ष हो सकता है कि आस्तिक दर्शनशास्त्रोंमें मोक्षोपयुक्त मार्गप्रदर्शकत्व नहीं है और नास्तिकदर्शनोंमें है, तथापि उभयदर्शनज्ञ प्रेक्षावान् पुरुषकी विचार-कसौटीमें कसे जानेके बाद नास्तिकदर्शन ही उक्तार्थमें पूतिकूष्माण्डीकृत प्रतीत होते हैं, अतः उक्त सत्प्रतिपक्ष प्रेक्षावत्पुरुषश्रद्धेय नहीं हो सकता है।

आस्तिक और नास्तिक दर्शनोंका परस्पर भेद जिस-जिस अंशमें है, उसे संक्षेपसे बतलाना प्रकृतमें अनुपयुक्त नहीं होगा, अतः उसको दिखाते हैं।

## न्यायशास्त्र

न्यायशास्त्रके मूल रचयिता महर्षि गौतम हैं। उन्होंने सोलह पदार्थ माने हैं—प्रमाण, प्रमेय, संशय, प्रयोजन, दृष्टान्त, सिद्धान्त, अवयव, तर्क, निर्णय, वाद, जल्प, वितण्डा, हेत्वाभास, छल, जाति और निग्रहस्थान *। इनके मतमें चार प्रमाण हैं—प्रत्यक्ष, अनुमान, उपमान और शब्द। इन सोलह पदार्थोंके तत्त्वज्ञानसे अनात्मभूत देह आदिमें आत्माकी जो मिथ्याज्ञानरूप भ्रान्ति है, उसकी निवृत्ति होती है और उससे राग † आदि दोषोंकी निवृत्ति होती है। दोषोंकी निवृत्तिसे शुभाशुभ कर्मकी निवृत्ति, इससे निमित्तके अभावसे नैमित्तिक अनेक योनियोंमें जन्मकी निवृत्ति, और इससे गर्भवाससे लेकर मरण तकके सम्पूर्ण दुःखोंकी निवृत्तिरूप मुक्ति होती है।

## वैशेषिकशास्त्र

वैशेषिक दर्शनके रचयिता कणाद मुनि हैं। इनके मतमें छः पदार्थ हैं—

---

होनेसे तदुदित विचार नित्यनिरतिशयसुखपथप्रदर्शक नहीं हो सकते हैं। और पुरुषबुद्धिके नैकविध भ्रमादिदोषपिशाचाक्रान्त होनेके कारण भी उनका तत्त्वप्रतिपादन अवश्य भ्रान्त हो सकता है। अपौरुषेय वेदवाक्योंके निरस्तशङ्कापङ्ककलङ्क होनेके कारण उनमें ऐसी सम्भावना नहीं हो सकती है, ऐसा आस्तिकोंका तात्पर्य है।

* इन पदार्थोंका प्रतिपादन करनेवाला गौतमका यह प्रथम सूत्र है—'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः' [ गौ॰ सूत्र १ अ॰ आ॰ १ सू॰ १ ]।

† 'दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः' यह सूत्र इसमें प्रमाण है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

द्रव्य, गुण, कर्म, सामान्य, विशेष और समवाय। प्रत्यक्ष और अनुमान दो ही प्रमाण हैं। उक्त छः * प्रकारके पदार्थोंके ईश्वरानुग्रहवश यथार्थज्ञानसे आत्यन्तिक दुःखकी निवृत्तिरूप मोक्षकी उत्पत्ति होती है। यद्यपि उक्त प्रकारसे न्याय और वैशेषिकका परस्पर भेद है, तथापि प्रतिज्ञादि न्यायप्रयुक्त विचारकी प्रवृत्ति होनेसे दोनों शास्त्रोंमें न्यायशास्त्रत्वका व्यवहार होता है †।

## निरीश्वर सांख्यशास्त्र

इस शास्त्रके प्रधान आचार्य कपिल मुनि हैं। इनके मतमें संक्षेपसे पहले चार प्रकारके पदार्थोंका विभाग किया गया है—प्रकृति, विकृति, प्रकृतिविकृति और प्रकृतिविकृतिसे रहित ‡। इन सामान्यरूपसे परिगणित पदार्थोंके विशेषरूपसे पचीस विभाग हैं—प्रकृति, पुरुष, महत्तत्त्व, अहङ्कार, मन, श्रोत्र, त्वक्, चक्षु, जिह्वा, घ्राण, वाक्, पाणि, पाद, पायु, उपस्थ, शब्द, स्पर्श, रूप, रस, गन्ध, आकाश, वायु, अग्नि, जल और पृथ्वी ×। और इसमें प्रत्यक्ष, अनुमान और शब्द ये तीन प्रमाण हैं। परम पुरुष जगत्के प्रति कारण नहीं है, किन्तु प्रकृति ही कारण है। सत्त्व, रज और तम इन तीन गुणोंकी साम्यावस्थाको प्रकृति कहते हैं। किसी एक गुणका उद्रेक होनेपर वह प्रकृति कार्यकारणरूपमें परिणत होती

---

* यद्यपि अभावको लेकर सात पदार्थ काणादमतमें यत्र-तत्र उपवर्णित हैं, तथापि अभावपदार्थके तुच्छ होनेसे वैशेषिक सूत्रमें उसकी गणना नहीं की गयी है—'धर्मविशेषप्रसूतात् द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायानां पदार्थानां साधर्म्य-वैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्।'

† अथवा न्यायशब्दका अर्थ परार्थानुमान होता है, और परार्थानुमान सम्पूर्ण शास्त्रोंका अनुग्राहक है और सब कर्मोंके अनुष्ठानमें परम्परया प्रयोजक भी है, अतः 'प्राधान्येन व्यपदेशाः भवन्ति' इस न्यायसे इन शास्त्रोंमें न्यायशब्दका व्यवहार होता है। इस विषयमें अभियुक्तोंने कहा है—'सोऽयं परमो न्यायो विप्रतिपन्नपुरुषप्रतिपादकत्वात्' इत्यादि।

‡ निम्नलिखित श्लोक इस पदार्थविभागमें प्रमाण है—

'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकस्तु विकारो न प्रकृति र्नाऽपि विकृतिः पुरुषः॥'

× इन पदार्थोंकी उत्पत्ति इस प्रकार बतलायी गयी है—

'प्रकृतेर्महान् ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः।
तस्मादपि च षोडशकात् पञ्चभ्यः पञ्च भूतानि॥'

अर्थात् प्रकृतिसे महत्तत्त्व (बुद्धितत्त्व), महत्तत्त्वसे अहङ्कार, अहङ्कारसे एकादश इन्द्रिय और पञ्चतन्मात्रा, और इन सोलहमें स्थित पञ्चतन्मात्रासे आकाशादि पञ्चभूत पदार्थ उत्पन्न होते हैं।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

है, क्योंकि सम्पूर्ण पदार्थोंमें सत्त्वादि गुणत्रयकी अवस्थिति है, अतः उनका कारण गुणत्रयवती प्रकृति ही हो सकती है, यह उनका सिद्धान्त है। इसमें ईश्वरका प्रतिपादन नहीं है, अतः यह 'निरीश्वर साङ्ख्य' कहलाता है। इस मतमें प्रकृति और पुरुपके विवेक-प्रत्ययसे मुक्ति होती है। इसका अन्य अवान्तर भेद साङ्ख्यकारिका आदि ग्रन्थोंसे जानना चाहिए।

## सेश्वर साङ्ख्यशास्त्र

सेश्वर साङ्ख्यशास्त्रको योगशास्त्र कहते हैं। इसके मूलभूत प्रणेता आचार्य पतञ्जलि मुनि हैं। इन्होंने सम्पूर्ण योगशास्त्रके तत्त्वोंका चार पादोंमें समावेश किया है, इसीको योगसूत्र कहते हैं। पदार्थविवेकमें पूर्वोक्त साङ्ख्यशास्त्रकी अपेक्षा एक अधिक परमेश्वर पदार्थ * माना गया है, अतः इनके मतमें छव्वीस पदार्थ हैं। प्रकृतिमें अधिष्ठित परमात्माके महत्तत्त्व, काल और पुरुप—कार्योपाधि जीव—इस प्रकार तीन पदार्थ भी ये लोग मानते हैं। जब परमात्माकी असीम कृपासे अष्टाङ्गयोग द्वारा जीवका अज्ञान नष्ट हो जाता है, तब अपनेको बुद्धि आदि पदार्थोंसे भिन्न समझता हुआ वह कैवल्यरूप अमृतसागरमें अवगाहनकर समस्त दुःखोंसे विमुक्त हो जाता है, इस प्रकार उनके मतका संक्षेप है।

## पूर्व मीमांसाशास्त्र

पूर्व मीमांसाशास्त्रकी सूत्रों द्वारा सबसे पहले आचार्य जैमिनिने संसारमें प्रसिद्धि की। इन्होंने 'अथातो धर्मजिज्ञासा' आदि सूत्रोंसे बारह अध्यायोंमें केवल धर्माधर्मका ही विचार किया है। पूर्वमीमांसाको छोड़कर दर्शन शास्त्रोंमें से किसी भी शास्त्रमें इतने सूत्र नहीं हैं। इस शास्त्रमें दो मत प्रचलित हैं—कुमारिल भट्टका मत और प्रभाकरका मत। इन मतोंको भाट्टमत और गुरुमत भी कहते हैं। इनमें भाट्टानुसारी छः प्रमाणोंसे वस्तुकी सिद्धि करते हैं। वे छः प्रमाण प्रत्यक्ष, अनुमान, उपमान, शब्द, अर्थापत्ति और अनुपलब्धि हैं। और प्रभाकरके मतमें अनुपलब्धिप्रमाणके न होनेसे प्रत्यक्ष, अनुमान, उपमान, शब्द और अर्थापत्ति पांच ही प्रमाण हैं, क्योंकि वे अभावको पदार्थ नहीं मानते, प्रत्युत उसे अधिकरणस्वरूप मानते हैं, अतः अभावके प्रत्यक्षके लिए अनुपलब्धिप्रमाणकी इनके मतमें आवश्यकता

---

* 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः' अर्थात् क्लेश आदिसे रहित पुरुपविशेष ईश्वर है, यह सूत्र पतञ्जलिके मतमें ईश्वरकी स्वीकृतिमें प्रमाण है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

नहीं है। प्रमेयविभागके अवसरमें प्रभाकरानुयायी द्रव्य, गुण, कर्म, सामान्य, समवाय, शक्ति, सङ्ख्या और सादृश्य इस प्रकारसे आठ पदार्थ मानते हैं। मीमांसक ईश्वरको नहीं मानते। कुछ साम्प्रदायिक कहते हैं कि मीमांसक ईश्वर नहीं मानते। पर ऐसी बात नहीं है, किन्तु ईश्वरके होते हुए भी वह स्वतन्त्र नहीं है अर्थात् तत्-तत् कर्मोंके अनुसार तत्-तत् प्राणियोंको शुभाशुभ फल देनेके कारण वह ईश्वर परतन्त्र है, अतएव उसका अस्तित्व अकिञ्चित्कर होनेसे नहींके बराबर ही है। मनुष्य धर्माधर्मका ठीक-ठीक परिज्ञान करके उनके अनुष्ठान द्वारा स्वर्ग प्राप्त कर सकता है। यही मोक्ष है, क्योंकि स्वर्गकी प्राप्तिसे किसी प्रकारका कष्ट नहीं होता, वह सुखस्वरूप है। ज्ञानकाण्डको ये लोग स्वार्थमें प्रमाण नहीं मानते हैं। अन्य अधिक विस्तार मीमांसाग्रन्थोंसे जानना चाहिए।

## उत्तर मीमांसाशास्त्र

उत्तर मीमांसाशास्त्रका सूत्रों द्वारा भगवान् वेदव्यासने ग्रथन किया है। इसका सम्पूर्ण विचार चार अध्यायोंमें है, जिनका क्रमशः समन्वयाध्याय, अविरोधाध्याय, साधनाध्याय और फलाध्यायसे भी व्यवहार होता है। उत्तरमीमांसामें वेदके ज्ञानकाण्डका विचार है। प्रकृतमें मीमांसाशब्दका अर्थ पूजित विचार होता है। उसी विचारको पूजित विचार कहते हैं जो मनुष्योंको निरतिशय नित्य सुखकी साधनताका यथार्थ परिज्ञान करानेमें समर्थ हो। और पूर्वमीमांसामें आये हुए मीमांसाशब्दका अर्थ 'धर्माधर्मविषयक विचार' करना चाहिए। इस प्रकारके भिन्नार्थकत्वमें केवल पूर्वोत्तरशब्द ही प्रमाणरूपसे पर्याप्त हैं। इसी उत्तरमीमांसाके लिए वेदान्तशब्दका व्यवहार होता है। यद्यपि वेदान्तशब्दका मुख्य अर्थ वेदका उपनिषद्भाग * है, तथापि परम्परया उपनिषद्भागके अर्थनिर्वचनमें उपकारक शारीरकमीमांसा † आदि भी वेदान्तशब्दका अर्थ होता है।

---

* वेदका सामान्यतः तीन काण्डोंमें विभाग किया गया है—कर्मकाण्ड, उपासनाकाण्ड और ज्ञानकाण्ड। इनमें ज्ञानकाण्डको अर्थात् आत्मतत्त्वप्रतिपादक वेदविभागको उपनिषत् कहते हैं।

† शारीरक (जीवात्मा) त्वंपदवाच्य पदार्थ, उसका तत्पदवाच्य परमात्माके साथ अभेद प्रतिपादनके लिए जो मीमांसा है, उसको शारीरकमीमांसा कहते हैं, अर्थात् ब्रह्मसूत्रभाष्य आदि।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

भगवान् शङ्कराचार्यके सिवा ब्रह्मसूत्रके ऊपर अन्य भी कई-एक आचार्योंने अपने-अपने अभिमत साम्प्रदायिक अर्थके प्रतिपादनके लिए भाष्य बनाये हैं, उनमें से रामानुजाचार्य, मध्वाचार्य, वल्लभाचार्य और निम्बार्काचार्य प्रसिद्ध हैं।

## रामानुजाचार्यका मत

श्रीरामानुजाचार्य द्वारा प्रचारित सिद्धान्तको विशिष्टाद्वैतसिद्धान्त कहते हैं। विशिष्टाद्वैतसिद्धान्त शब्दकी व्युत्पत्ति इस प्रकार है—'द्वयोर्भावः द्विता, द्विता एव द्वैतम्, न द्वैतम् अद्वैतम् अभेदः, विशिष्टस्य स्वव्यतिरिक्तसमस्तचेतनाचेतनविशिष्टस्य ब्रह्मणः अद्वैतम् विशिष्टाद्वैतम्, तदेव सिद्धान्तः विशिष्टाद्वैतसिद्धान्तः' अर्थात् ब्रह्म अद्वैत है, किन्तु स्वभिन्न चेतन और अचेतन पदार्थोंसे विशिष्ट है।

इनके मतमें चित्, अचित् और ईश्वरके भेदसे अर्थात् भोक्ता, भोग्य और नियामकके भेदसे तीन पदार्थ हैं। जैसे कि उन्होंने ही अपने ग्रन्थमें कहा है—

'ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः।
ईश्वरश्चित इत्युक्तो जीवो दृश्यमचित् पुनः ॥'

चित्शब्दसे कहलानेवाला जीवात्मा परमात्मासे भिन्न अणु तथा अविनाशी है। अचित्-शब्दवाच्य पदार्थ भोग्य, भोगोपकरण और भोगायतनके भेदसे त्रिविध हैं। इस त्रिविध जगत्का कर्ता वासुदेवपदवाच्य परमात्मा है। इसीकी उपासनासे * जीवकी मुक्ति होती है, इत्यादि।

## मध्वाचार्यका मत

मध्वाचार्य द्वैतवादी हैं। इन्होंने ब्रह्मसूत्रके ऊपर भाष्य बनाकर द्वैतवाद सिद्ध करनेकी चेष्टा की है। स्वतन्त्र और अस्वतन्त्र ये दो इनके मतमें तत्त्व हैं। सम्पूर्ण शुभगुणसम्पन्न विष्णु स्वतन्त्र तत्त्व है, और इतर सब अस्वतन्त्र हैं। स्वतन्त्र ईश्वर और जीवका परस्पर भेद ज्ञात हो जानेपर मुमुक्षु सांसारिक कष्टसे मुक्त हो जाता है, और दुःखरहित आनन्दका उपभोग करता हुआ वह

---

* ईश्वरकी पांच प्रकारसे उपासना मानी गयी है—अभिगमन, उपादान, इज्या, स्वाध्याय, और योग। देवताके स्थान और मार्ग आदिको साफ-सुथरा करना अभिगमन; गन्ध, पुष्प आदि देवताओंकी पूजाकी सामग्रीका उपादान उपादान; देवतापूजन इज्या; अर्थानुसन्धानपूर्वक स्तोत्रादिका पाठ स्वाध्याय और देवानुसन्धान योग कहलाता है।

२

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

ईश्वरके पास प्रमोद प्राप्त करता है। रामानुजोंके समान ये भी जीवाणुवादी ही हैं। इनके मतको पूर्णप्रज्ञदर्शन * भी कहते हैं।

## वल्लभाचार्यका मत

वल्लभाचार्यका जो ब्रह्मसूत्रके ऊपर भाष्य है, उसको अणुभाष्य भी कहते हैं। ये भी जीवाणुवादी ही हैं, परन्तु पूर्वोक्त मतोंमें इनके मतमें यह विशेष है कि गोलोकाधीश्वर पुरुषोत्तम श्रीकृष्ण ही उपास्य हैं, अन्य नहीं। किञ्च, यह मानते हैं कि यद्यपि वस्तुतः द्वैत है, तथापि शुद्धाद्वैत ही वेदान्तप्रतिपाद्य है, अर्थात् शुद्ध जीव और परमात्माका अद्वैत है, क्योंकि जीव और ईश्वरकी अविद्या और मायारूप उपाधि वे नहीं मानते हैं, इसलिए अग्नि और विस्फुलिङ्गके समान शुद्ध जीव और परमात्माका ऐक्य हो सकता है और अविकृतपरिणामवाद भी इन्होंने माना है।

## निम्बार्काचार्यका मत

ब्रह्मसूत्रके ऊपर निम्बार्काचार्यकी सौरभ नामकी अतिसंक्षिप्त व्याख्या है इसीको भाष्य भी कहते हैं। इनका मत भेदाभेदवाद कहलाता है। इनके मतमें चित्, अचित् और ब्रह्म ये तीन पदार्थ मूलरूपसे माने गये हैं। चित्शब्दसे जीव लिया गया है, जो अणु, ज्ञानरूप और ज्ञातृत्व आदि धर्मवाला एवं अहंपदवाच्य है। अचित्पदार्थ प्राकृत, अप्राकृत और कालके भेदसे तीन प्रकारका है। सत्त्व आदि तीन गुणोंका आश्रयीभूत द्रव्य प्राकृत पदार्थ है और विष्णुपद परमपद आदिसे कहलानेवाला अप्राकृत है। इन दोनोंसे भिन्न अचेतन द्रव्यका नाम काल है। जगत्कर्तृत्व आदि गुणोंसे युक्त नारायण, वासुदेवपदवाच्य श्रीकृष्ण ही ब्रह्मशब्दका अर्थ है। ये चित्, अचित् और ब्रह्म पदार्थ अनेक वाक्योंसे † परस्पर भिन्न और

---

* प्रथमस्तु हनूमान् स्यात् द्वितीयो भीम एव च।
पूर्णप्रज्ञस्तृतीयः स्यात् भगवत्कार्यसाधकः॥

इस श्लोकसे मध्वमतप्रवर्तकपरम्पराके ऊपर कुछ आभास पड़ता है—अर्थात् वायुके अवतारभूत हनूमान् आदि द्वारा यह मत प्रस्तुत हुआ है।

† अर्थात् 'द्वा सुपर्णा' इत्यादि वाक्योंसे पदार्थोंकी भिन्नता भासती है और 'सदेव सोम्येदमग्र आसीत्', 'सर्वं खलु इदं ब्रह्म' इत्यादि श्रुतियोंसे उक्त पदार्थोंकी परस्पर अभिन्नता भासती है, अतः इन वाक्योंके आधारपर चिदचिद्भिन्नाभिन्न ब्रह्म जिज्ञास्य है, यह इन लोगोंका कथन है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

अभिन्न भी मालूम पड़ते हैं, इसलिए भिन्नार्थप्रतिपादक और अभिन्नार्थप्रतिपादक वाक्योंका स्वार्थमें प्रामाण्य होनेके कारण ब्रह्माधीनस्थितिप्रवृत्तिमत्त्व रूपसे * और प्रत्येकवृत्ति असाधारण धर्मसे चिदचिद्भिन्नाभिन्न ब्रह्म ही मुमुक्षु द्वारा जिज्ञासितव्य है। उक्त प्रकारके ब्रह्मज्ञानसे भगवद्भावापत्तिरूप मोक्षकी प्राप्ति होती है, यह निम्बार्कका संक्षिप्तसे मत है।

इस प्रकार आस्तिकदर्शनोंका साधारणरूपसे दिग्दर्शन कराया गया है। इनका अधिक विस्तार तो उनके ग्रन्थोंसे जानना चाहिए। अब नास्तिक दर्शनोंका कुछ विवेचन करते हैं।

## चार्वाकमत

'चार्वाक' शब्दका अर्थ है—आपाततः रमणीय वाणीको कहनेवाला मत-विशेषप्रवर्तक आचार्य। चार्वाकमतके आलोचनसे रागतः प्रवृत्तिशील पुरुषोंको उनका मन्तव्य अच्छा ही लगता है। इनके मतमें चार तत्त्व हैं—पृथ्वी, जल, तेज और वायु। ये ही चार तत्त्व देहाकारमें परिणत होकर मदशक्तिसे युक्त मद्यके समान † चैतन्ययुक्त हो जाते हैं और चैतन्ययुक्त देहेन्द्रियादि ही इनके मतमें आत्मा है। इनसे अतिरिक्त 'आत्मा' कोई पदार्थ नहीं है। और इस मतमें केवल प्रत्यक्ष ही प्रमाण है, अनुमानादि नहीं। इस मतके मूल प्रवर्तक आचार्य बृहस्पति हैं। ये लोग अतीन्द्रिय पदार्थ मानते ही नहीं ‡।

---

* चक्षु आदि इन्द्रियाँ यद्यपि परस्पर स्वकीय असाधारण धर्मसे भिन्न हैं, तथापि प्राणाधीनस्थितिकत्व रूपसे अभिन्न हैं। वैसे ही चित्, अचित् और ब्रह्मके विषयमें भी उक्त दृष्टान्त घट सकता है, यह इनका मनोगत भाव है।

† जैसे सुरा जिस पदार्थसे बनती है, उस पदार्थमें मादकता पहलेसे नहीं रहती, किन्तु उसकी विशेषक्रिया द्वारा उसमें अकस्मात् मादकता आ जाती है, वैसे ही पृथिव्यादि पदार्थोंमें प्रत्येकरूपसे चैतन्यशक्तिके न होनेपर भी उनके परस्पर विलक्षण आकृतिमें परिणत हो जानेके बाद चैतन्यशक्ति आ जाती है, यह चार्वाकोंका तात्पर्य है। जैसे कि इन्हीं लोगोंकी उक्ति है—

'अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते ॥१॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः ॥२॥'

‡ अर्थात् अतीन्द्रिय पदार्थोंकी सिद्धि अनुमानसे की जा सकती है और अनुमान तो इनके मतमें प्रमाण नहीं है, अतः इनके मतमें अतीन्द्रिय पदार्थ नहीं है, यह तात्पर्य है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

## बौद्धमत

बौद्धमत चार प्रकारसे विभक्त है—माध्यमिक, योगाचार, सौत्रान्तिक और वैभाषिक। चार्वाकमतसे इनके मतमें अनेक विलक्षणताएँ हैं। ये लोग अनुमानको भी प्रमाण मानते हैं।

## माध्यमिघमत

इन चारोंके मतमें 'सर्वं क्षणिकं क्षणिकम्, सर्वं दुःखं दुःखम्, सर्वं स्वलक्षणं स्वलक्षणम् और सर्वं शून्यं शून्यम्' इस प्रकारकी चतुर्विध भावनासे * परम पुरुषार्थ होता है, ऐसा माना गया है। इनका मत है कि शिष्योंको गुरुके पास जाकर योग और आचार दो क्रियाएँ करनी चाहिएँ। † योग—अप्राप्त वस्तुकी यथार्थरूपसे प्राप्तिके लिए शङ्का। आचार—गुरुने जो उत्तररूपसे कहा हो, उसका अङ्गीकार। गुरुजीने जो उपदेक्ष दिया हो उसका अङ्गीकारकर पर्यनुयोग (शङ्का) करनेपर माध्यमिकसंज्ञा होती है। ये माध्यमिक सर्वशून्यवादी हैं और अनुमान प्रमाण मानते हैं।

## योगाचारमत

माध्यमिक बौद्ध सर्वशून्यवादी हैं। और ये योगाचार बाह्यार्थशून्यवादी हैं अर्थात् आन्तरज्ञानरूप अर्थकी क्षणिकरूपसे स्थिति मानते हैं। इसमें युक्ति है कि यदि ज्ञानरूप अर्थ न माना जाय, तो जगदान्ध्यप्रसक्ति होगी, इसलिए बुद्धितत्त्व माननेकी आवश्यकता है। इनकी 'योगाचार' संज्ञा इसलिए हुई कि गुरु द्वारा कहे गये भावनाचतुष्टय और बाह्यार्थशून्यत्वका अङ्गीकार करनेके अनन्तर आन्तरज्ञानरूप अर्थकी शून्यता कैसे हो सकती है? इस प्रकार पर्यनुयोग किया है। ये लोग क्षणिकत्व रूपसे बुद्धितत्त्वका अङ्गीकार करके बाह्यार्थवादका खण्डन करते हैं अर्थात् बाह्य पदार्थ ज्ञानरूप ही है, उसकी ज्ञानसे अतिरिक्त सत्ता नहीं मानते हैं। केवल वासनाविशेषसे ज्ञानमें अनेक आकार भासते हैं। पूर्वोक्त भावनाचतुष्टयसे सम्पूर्ण वासनाओंका उच्छेद हो जानेसे केवल विशुद्ध विज्ञानका उदय होना ही इनके मतमें मोक्षपदार्थ है।

## सौत्रान्तिकमत

सौत्रान्तिकमतमें ज्ञानके सिवाय बाह्यार्थ वस्तुकी सत्ता अनुमानसे मानी गयी

---

* अर्थात् सब क्षणिक है, दुःखात्मक है, स्वलक्षण है और शून्य है, इस प्रकारकी भावनासे ही मोक्ष हो सकता है, यह बौद्धोंका कथन है।

† 'अप्राप्तार्थस्य प्राप्तये पर्य्यनुयोगो योगः, गुरूक्तस्यार्थस्याङ्गीकरणमाचारः' इस प्रकार योग और आचारका लक्षण मिलता है।

CC-0. Mumukshu Bhawan Varanasi Collection. Digitized by eGangotri

